# ॥ श्रीमन्त्रराजपदस्तोत्रम् ॥

पाञ्चरात्र आगमीय अहिर्बुध्न्य संहितात्
श्री मन्त्र राज पद स्तोत्रम्
श्री ईश्वर उवाच -
वृत्तोत्फुल्लविशालाक्षं विपक्षक्षयदीक्षितम् ।
निनादत्रस्तविश्वाण्डं विष्णुमुग्रं नमाम्यहम् ॥ १॥

सर्वैरवध्यतां प्राप्तं सबलौघं दितेः सुतम् ।
नखाग्रैः शकलीचक्रे यस्तं वीरं नमाम्यहम् ॥ २॥

पदावष्टब्धपातालं मूर्धाविष्टत्रिविष्टपम् ।
भुजप्रविष्टाष्टदिशं महाविष्णुं नमाम्यहम् ॥ ३॥

ज्योतींष्यर्केन्दुनक्षत्रज्वलनादीन्यनुक्रमात् ।
ज्वलन्ति तेजसा यस्य तं ज्वलन्तं नमाम्यहम् ॥ ४॥

सर्वेन्द्रियैरपि विना सर्वं सर्वत्र सर्वदा ।
यो जानाति नमाम्याद्यं तमहं सर्वतोमुखम् ॥ ५॥

नरवत् सिंहवच्चैव यस्य रूपं महात्मनः ।
महासटं महादंष्ट्रं तं नृसिंहं नमाम्यहम् ॥ ६॥

यन्नामस्मरणाद् भीताः भूतवेतालराक्षसाः ।
रोगाद्याश्च प्रणश्यन्ति भीषणं तं नमाम्यहम् ॥ ७॥

सर्वोऽपि यं समाश्रित्य सकलं भद्रमश्नुते ।
श्रिया च भद्रया जुष्टो यस्तं भद्रं नमाम्यहम् ॥ ८॥

साक्षात् स्वकाले सम्प्राप्तं मृत्युं शत्रुगणान्वितम् ।
भक्तानां नाशयेद् यस्तु मृत्युमृत्युं नमाम्यहम् ॥ ९॥

नमस्कारात्मकं यस्मै विधायाऽऽत्मनिवेदनम् ।
त्यक्तदुःखोऽकिलान् कामान् अश्नन्तं तं नमाम्यहम् ॥ १०॥

दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः ।
अतोऽहमपि ते दासः इति मत्वा नमाम्यहम् ॥ ११॥

फलश्रुतिः

शङ्करेणादरात् प्रोक्तं पदानां तत्त्वनिर्णयम् ।
त्रिसन्ध्यं यः पठेत् तस्य श्रीर्विद्याऽऽयुश्च वर्धते ॥